# बालकेन्द्रम्

– शान्तला विश्वास







संस्कृतभारती
बेङ्गलुरु

*प्रकाशनम् -*
**संस्कृतभारती**
'अक्षरम्' ८ उपमार्गः, २ ऊङ्कः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९४ - ५०००
द्वितीयमुद्रणम् - २००० - ५०००

मूल्यं - रू. १२.००

*मुद्रणम् -*
**स्प्यान् प्रिण्ट्**
बसवनगुडि, बेङ्गलूरु - ५६० ००४

**BALAKENDRAM** - A syllabus for Balakendra, prepared by Shantala Vishwasa.

Publisher : **SAMSKRITA BHARATI** , 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.
Pages : iv + 44 Price : Rs. 12-00 Second Print : August, 2000
Printed at : **SPAN PRINT**, Basavanagudi, Bangalore - 4

# प्रास्ताविकं किञ्चित्

## (प्रथममुद्रणस्य)

संस्कृतभारत्या भाषापाठने विविधाः प्रयोगाः क्रियमाणाः सन्ति । तादृशेषु अन्यतमः प्रयत्नः 'बालकेन्द्रं' नाम । बालकेन्द्रे तत्परिसरस्थाः बालाः प्रतिदिनं घण्टां यावत् संस्कृताभ्यासं कुर्वन्ति । अत्रत्यं पाठनं नितराम् अनौपचारिकं भवति, आसक्तिजनकं च भवति इति तु बालकेन्द्रस्य वैशिष्ट्यम् ।

एतादृशानि 'बालकेन्द्राणि' राज्ये तत्र तत्र प्रचलन्ति । अन्ये अपि बहवः एतादृशानि बालकेन्द्राणि आरब्धुम् इच्छन्ति अपि । तादृशानाम् अपेक्षा बहोः कालतः आसीत् यत् एतस्य 'बालकेन्द्र'प्रयोगस्य पाठ्यक्रमं सज्जीकृत्य दातव्यम् इति । तेषाम् अपेक्षा इदानीम् एतत् पुस्तकद्वारा पूर्यमाणा अस्ति ।

यैः इतः पूर्वं सम्भाषणपाठनं कृतं तादृशाः यथा अवगन्तुं शक्नुयुः तथा अत्र ५० दिनात्मकः कश्चन पाठ्यक्रमः सज्जीकृतः । एषः पाठ्यक्रमः प्रयोगफलात्मकः, न तु अनन्यप्रमाणात्मकः । अत्र या प्रणाली प्रदर्शिता तस्याः विस्तरः, परिष्कारः, परिवर्तनं, परिवर्धनं वा अनुभविन्या शिक्षिकया (अनुभविना शिक्षकेण वा) अवश्यं कर्तुं शक्यते ।

एतस्य पुस्तकस्य मुखपुटकला श्रीमत्याः नन्दायाः । मुद्रणं च स्प्यान्प्रिण्ट् मुद्रणालयस्य । कलाकारिण्यै, मुद्रकाय तत्सहकारिबन्धुभ्यः, बालकेन्द्रप्रयोगं साकारीकृतवद्भ्यः कार्यकर्तृभ्यः च कृतज्ञताः समर्प्यन्ते ।

– प्रकाशकः

## (द्वितीयमुद्रणस्य)

'बालकेन्द्रम्' – इत्येषः प्रयोगः अत्यन्तं फलदायकः इति तु इदानीम् अनुभवसिद्धम् । अनेकेषु स्थानेषु प्रचलत्सु बालकेन्द्रेषु आगन्तॄणां बालानां वर्धमाना सङ्ख्या एव तत्र प्रमाणम् ।

बाल्ये एव बालानां मनसि संस्कृतविषये आसक्तिः श्रद्धा च यदि जागरिता भवति तर्हि भाविनि काले आन्तं ते संस्कृतानुरागिणः भविष्यन्ति । अद्यतनबालाः एव श्वस्तननागरिकाः । अतः इदानीमेव तेषाम् अन्तरङ्गे संस्कृतप्रीतिः जनयितव्या । तच्च कार्यं बालकेन्द्रे यशस्वितया सम्पादयितुं शक्यते ।

बालकेन्द्र-पुस्तकस्य प्रथमावृत्तिः षड्वर्षेभ्यः पूर्वं प्रकाशिता । प्रतिदिनं घण्टां यावत् ५० दिनानि पाठयितुं योग्यः कश्चन पाठ्यक्रमः तत्र दत्तः आसीत् । स च ईषदिव अपरिष्कृतः अपि आसीत् । तथापि तम् अवलम्ब्य तत्र तत्र कार्यकर्तृभिः बालकेन्द्राणि यशस्वितया सञ्चालितानि । वर्षात्पूर्वमेव पुस्तकस्य प्रथमावृत्तेः प्रतिकृतयः समाप्ताः अभवन् । इदानीं द्वितीयावृत्तिः प्रकाश्यमाना अस्ति । अनुभवबलात् अत्र अनेके परिष्काराः कृताः, नूतनाः अंशाः अपि योजिताः सन्ति । एतस्य आधारेण कार्यकर्तारः बालकेन्द्रं सम्यक् सञ्चालयितुम् अर्हन्ति इति वयं विश्वसिमः ।

पुस्तकसज्जीकरणे सहकृतवन्तः सर्वे कृतज्ञतापूर्वकं स्मर्यन्ते ।

– प्रकाशकः

# बालकेन्द्रम् - किम्, किमर्थम्, कथम्

## किमर्थम्

अद्यतनबालाः विद्यालयेषु, यद्यपि भाषाः पठन्ति, तथापि भाषासम्बद्धान् सांस्कृतिकान् विषयान्, देशभक्तानां जीवनचरित्राणि वा ज्ञातुम् अवसरं न प्राप्नुवन्ति । यतः विद्यालयस्य पाठ्यांशाः एव अधिकाः भवन्ति । तेषां पठने एव बालानां सर्वोऽपि समयः व्ययितः भवति । शिक्षकाणां मुखात् अपि एतादृशान् अंशान् ज्ञातुं बालाः न शक्नुवन्ति, यतः केवलं पाठ्यक्रमस्य समापने एव ते व्यग्राः भवन्ति । अन्यच्च शालायां दीयमानं शिक्षणम् अत्यन्तम् औपचारिकं, परीक्षाकेन्द्रितं च । अतः तत्र पठतां बालकानां, तेषां पितॄणां च दृष्टौ अङ्कप्राप्तिः एव अतिप्रधाना भवति । वास्तविकशिक्षणविषये तेषाम् अवधानं न्यूनं भवति ।

अद्यतने विद्यालयशिक्षणे गृहपाठलेखनस्य अनुचितम् अतिप्राधान्यम् आगतम् अस्ति । बालाः विद्यालये यावत् लिखन्ति ततोऽपि अधिकं तैः गृहे लेखनीयं भवति । एतावद्गृहपाठलेखनं बालानां सर्जनशीलतां सङ्कुचितां करोति, मनोविकासं निवारयति च । अतः एव अद्यतनबालाः गृहपाठलेखनरहितानि विरामदिनानि सर्वदा निरीक्षमाणाः भवन्ति ।

अतः, तादृशं किञ्चित् केन्द्रम् आवश्यकं यत्र भारतीयसंस्कृतिसम्बद्धान् विचारान् पाठयितुं व्यवस्था स्यात्, देशभक्तानां जीवनचरित्राणि श्रोतुम् अवसरः च स्यात्, यत्र च अनौपचारिकं शिक्षणं स्यात्, यत्र च परीक्षायाः गृहपाठस्य वा भारः बालानां मनसि भयं न जनयेत्, यत्र च बालाः मातुः उत्सङ्गे इव उत्साहेन हसन्तः क्रीडन्तः एव अस्माकं संस्कृति-सम्बद्धान् विचारान् जानीयुः - इत्येतस्याः कल्पनायाः मूर्ताकारः एव **बालकेन्द्रं** नाम ।

एतादृशस्य बालकेन्द्रस्य आवश्यकता सर्वत्रापि अस्ति एव ।

## संस्कृतेन किमर्थम्

संस्कृतस्य जनप्रियतासम्पादने सम्भाषणशिबिरम् इव अपरम् अत्यन्तं प्रभावि साधनं बालकेन्द्रं भवितुम् अर्हति । यतः भारतीय-संस्कृति-सम्बद्धेषु विचारेषु बहवः संस्कृतस्तोत्ररूपेण सन्ति । तेषां पाठनेन बालाः सहजतया संस्कृतिविषये आसक्ताः भवन्ति । बालानां प्रथमवयसि ग्रहणशक्तिः अधिका । अतः ते अल्पेन प्रयत्नेन बहून् अंशान् ग्रहीतुं शक्नुवन्ति ।अन्यच्च संस्कृतशब्दाः मातृभाषायामपि भवन्ति इत्यतः संस्कृतभाषा तेषां कष्टाय न भवति । अतः अत्यन्तं सुलभतया बालाः बालकेन्द्रे संस्कृतसम्भाषणं जानन्ति । एतेन कारणेन तेषाम् उच्चारणमपि शुद्धं भवति ।

बालकेन्द्रे ये संस्कृतं जानन्ति ते बालकाः सहजतया स्वगृहे अपि संस्कृतभाषायाः प्रयोगं कुर्वन्ति एव । तदा गृहस्थाः, तेषां बान्धवाः सर्वेऽपि क्रमशः संस्कृतविषये आसक्ताः अभिमानिनः च भवन्ति । केचन संस्कृताध्ययने अपि उत्सुकाः भवन्ति । एवं संस्कृतप्रचारार्थम् एकम् उत्तमं साधनं संस्कृतबालकेन्द्रम् ।

## स्वरूपम्

- सप्ताहे दिनद्वये भवितुमर्हति ।
- पर्यायदिनेषु वा भवितुमर्हति ।
- प्रतिदिनमपि भवितुमर्हति ।

(परं सप्ताहे द्वित्राणि दिनानि भवन्ति चेत् अधिकः लाभः ।)

## समयः

सामान्यतः बालकेन्द्रस्य अवधिः घण्टात्मकः भवति । (शिक्षिकायाः * सौकर्यम् अवलम्ब्य समये परिवर्तनं भवितुमर्हति ।)

* बालकेन्द्रस्य चालनं शिक्षिकया क्रियते इति मत्वा अस्मिन् पुस्तके सर्वत्र 'शिक्षिका' इति पदप्रयोगः कृतः । 'शिक्षकेण' अपि बालकेन्द्रं चालयितुं तु शक्यते एव ।

**आगन्तुमर्हाः**

- वयोमितिः - ५ तः १४ पर्यन्तम् ।
- गणद्वयं करणीयं भवति ।
- एकः गणः ५ तः ९ पर्यन्तम् ।
- अपरः गणः १० तः १४ पर्यन्तम् ।

**छात्रसङ्ख्या -**

५ तः ५५ पर्यन्तम् । (प्रतिकक्ष्यं ३० छात्राः इति तु आदर्शसङ्ख्या ।)

**स्थलम् -**

गृहं, मन्दिरं, विद्यालयः, क्रीडाङ्गणं वा । यत्किञ्चित् विशालं स्थलं भवितुमर्हति । क्रीडायाः निमित्तं पर्याप्तं स्थलं तत्र भवेत् ।

**उपस्थितिः -**

वर्षारम्भे निश्चितदिनाङ्कपर्यन्तं नूतनानां प्रवेशः भवितुम् अर्हति । प्रवेशसमाप्त्यनन्तरं प्रतिदिनम् उपस्थितिः स्वीकरणीया ।

**पाठ्यांशाः -**

**अ) संस्कृतिः -** १. श्लोकाः २. स्तोत्राणि ३. नित्यपञ्चाङ्गम् ४. सुभाषितानि ५. कथाः ६. संस्कृतगीतानि ७. योगासनम् ८. शिष्टाचाराः

**आ) भाषा -** संस्कृतसम्भाषणम्, नित्योपयोगि-सम्भाषणम् - इत्यादयः ।

**इ) क्रीडाः -** भाषाक्रीडाः, सङ्ख्याक्रीडाः, शारीरकक्रीडाः च ।

**१. श्लोकाः** - 'संस्कारसुधा' पुस्तकतः सङ्गृहीताः श्लोकाः ।

**२. स्तोत्राणि** - शिवपञ्चाक्षरीस्तोत्रम्, लिङ्गाष्टकम्, अच्युताष्टकम्, गणेशपञ्चरत्नम् - इत्यादयः ।

**३. नित्यपञ्चाङ्गम्** - मासानाम्, ऋतूनां, वासराणां, पक्षयोः, तिथीनां,

राशीनां, नक्षत्राणां च नामानि ।

**४. सुभाषितानि** -

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ।।

इति एतादृशानि 'सुभाषितरस'पुस्तकतः सङ्गृहीतानि सरल - सुभाषितानि । अन्यस्मात् अपि पुस्तकात् सङ्ग्रहीतुं शक्यते ।

**५. कथाः** - 'बालकथामाला', 'पञ्चतन्त्रकथाः', 'सुगन्धः' इत्यादिभ्यः पुस्तकेभ्यः 'सम्भाषणसन्देश'तः वा सङ्गृहीताः नीतिबोधककथाः । कथायां सरलानि वाक्यानि भवेयुः । अभिनयपूर्वकं चित्रप्रदर्शनपूर्वकं च कथा वक्तव्या ।

**६. संस्कृतगीतानि** - 'शिशुसंस्कृतं', 'गीतसंस्कृतं', 'गेयसंस्कृतम्' इत्यादिभ्यः सङ्गृहीतानि सम्भाषणसन्देशे प्रकाशितानि वा ।

**७. योगासनम्** - ताडासनम्, वृक्षासनम्, वज्रासनम्, पद्मासनम् - इत्यादीनि सरलानि आसनानि ।

**८. शिष्टाचाराः** - मातापित्रोः वन्दनम्, पादरक्षायाः व्यवस्थितं स्थापनम्, पङ्क्तिशः उपवेशनम्, संस्कृतिसम्बद्धाः आचार-विचाराः, अनुशासनम्, तिलकधारणम् इत्यादयः ।

## पाठ्योपकरणानि -

१. कागदफलकानि २. स्फोरकपत्राणि ३. नित्योपयोगिनां वस्तूनां नामभिः सहितानि चित्राणि, महापुरुषाणां चित्राणि, कथाचित्राणि - इत्यादयः ।

## पाठ्योपकरणानां निर्माणम् -

१. फलानां, वाहनानां, पुष्पाणां, प्राणिनां च चित्राणि, नित्योपयोगिनां वस्तूनां चित्राणि च सङ्गृह्य तानि कागदे योजनीयानि । अधः देवनागरीलिप्या, मातृभाषालिप्या च तेषां नामानि लेखनीयानि ।

२. बालानाम् उपयोगः यथा स्यात् तथा देशभक्तानां चित्राणि सङ्गृह्य योजनीयानि ।

३. कथाचित्राणि सङ्गृह्य चित्राणाम् अधः संस्कृतभाषया सा कथा लेखनीया ।

४. विभक्तीनां पाठनार्थं नूतनानां शब्दानां ज्ञापनार्थं च स्फोरकपत्राणाम् उपयोगः कर्तुं शक्यते ।

**सूचनाः -**

* **प्रार्थना** - आवर्षं समाना भवितुमर्हति, अथवा मासत्रये एकं वा ।
* **गीतानि** - प्रतिपञ्चदशदिनम् एकं गीतम् ।
* **श्लोकाः** - ये श्लोकाः कण्ठस्थाः तान् बालाः वदेयुः । अनन्तरं नूतनाः पाठनीयाः ।
* **उच्चारणम्** - प्रार्थना-श्लोक-गीतादिषु उच्चारणविषये विशेषावधानं स्यात् । छात्राणाम् उच्चारणम् अपि विशेषतः परिशीलनीयम् ।
* **अभिनयः** - पाठे, पाठबिन्दोः यथा तथा अभिनयस्य अपि विशेष-प्राधान्यं भवति । अतः अभिनयविषये अवधानं भवतु ।
* **पाठनतन्त्राणि** - सम्भाषणपाठः सर्वदा तन्त्रप्रधानः भवति । अतः सर्वेषां बिन्दूनां पाठने तन्त्रं विशेषतः चिन्तनीयम् । छात्राणां मुखतः वाचयितुम् अभ्यासाः (Drills) अपि कारणीयाः ।
* **कथा-क्रीडादयः** - परिचयार्थम् अत्र काश्चन कथा-क्रीडादयः दत्ताः । एतेषु परिवर्तनं कर्तुं शक्यते एव । परिवर्तनसमये सरलता मनसि भवतु । निरूपणे सदा भाषासरलता भवतु ।

## पाठ्यक्रमः (दिनक्रमेण)

# प्रथमं दिनम्

छात्रान् पङ्क्तिशः उपवेश्य शिक्षिका पाठयेत् ।

प्रार्थना - या कुन्देन्दु-तुषार-हार-धवला या शुभ्रवस्त्रावृता
या वीणा-वरदण्ड-मण्डितकरा या श्वेत-पद्मासना ।
या ब्रह्माच्युत-शङ्कर-प्रभृतिभिः देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ।।

(पाठनावसरे पदविभागं कृत्वा, सावधानं पाठयेत् ।)

श्लोकः - कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।
करमूले स्थिता गौरी प्रभाते करदर्शनम् ।।

(करदर्शनं कारणीयम् ।)

समुद्रवसने देवि पर्वतस्तनमण्डले ।।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।।

(छात्रैः सर्वैः भूमिं स्पृष्ट्वा नमस्कारः करणीयः ।)

रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम् ।
शयने यः स्मरेन्नित्यं दुःस्वप्नस्तस्य नश्यति ।।

('रात्रौ शयनावसरे एतं श्लोकं वदन्तु' इति सूचना दातव्या ।)

शुभं कुरु त्वं कल्याणम् आरोग्यं धनसम्पदः ।
दुष्टबुद्धि-विनाशाय दीपज्योतिर्नमोस्तु ते ।।

('दीपज्वालनावसरे एषः श्लोकः वक्तव्यः' इति बालः सूचनीयाः ।)

संस्कृतसम्भाषणम् - मम नाम ...... ।
भवतः नाम किम् ? (अभिनयः)
भवत्याः नाम किम् ?

परस्परं बालानां परिचयः ।

(प्रतिदिनं स्वल्पः एव पाठ्यांशः अत्र दत्तः भवति । पञ्चदशनिमेषान् यावत् सः पाठ्यांशः पाठनीयः । सर्वेषाम् अपि छात्राणाम् अभ्यासः कारणीयः ।)

अभिनयगीतम् -

बालो रोदिति हे अम्ब ! आनय त्वम् इह शशिबिम्बम् ।
निधाय मामककरमध्ये नन्दामीन्दोः सान्निध्ये ।।

काचिन्माता शिशुमुन्नीय सायं भक्ष्यं भोजयति ।
शिशुरपि भक्ष्यं दूरीकुर्वन् चित्रैः प्रश्नैः पीडयति ।।१।।

चरति विहायसि मेघः कुतः कस्मात् तम् इह नानयसि ?
श्रान्तौ सत्यां घर्मे अहनि तदुपरि स्वापं करवाणि ।।२।।

– *विश्वासः*

सङ्ख्यापाठनम् - एकं, द्वे, त्रीणि, चत्वारि, पञ्च, षड्, सप्त, अष्ट, नव, दश ।

क्रीडा -

**नदीतीरम्**

बालाः मण्डलाकारेण तिष्ठेयुः । शिक्षिका यदा 'नदी' इति वदति, तदा बालाः एकं पदम् अग्रे कूर्देयुः । शिक्षिका 'तीरम्' इति यदा वदति, तदा एकपदं पृष्ठभागे कूर्देयुः । एवमेव पुनरावर्तनं भवति । शिक्षिका 'नदी' इति वदन्ती पृष्ठतः कूर्देत् । 'तीरम्' इति वदन्ती अग्रे अपि कूर्देत् । किन्तु बालास्तु शिक्षिकायाः सूचनाम् अनुसरेयुः, न तु व्यवहारम् । ये दोषं कुर्वन्ति ते बाह्याः भवन्ति । एवमेव क्रीडा अनुवर्तते ।

नित्यपञ्चाङ्गम् -

**वासराणां नामानि** - भानुवासरः, सोमवासरः, मङ्गलवासरः,

बुधवासरः, गुरुवासरः, शुक्रवासरः, शनिवासरः ।

**मासानां नामानि** - चैत्रः, वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रपदः, आश्वयुजः, कार्त्तिकः, मार्गशीर्षः, पुष्यः, माघः, पाल्गुनः ।

ऐक्यमन्त्रः - यं वैदिका मन्त्रदृशः पुराणाः
इन्द्रं यमं मातरिश्वानमाहुः ।
वेदान्तिनोऽनिर्वचनीयमेकं
यं ब्रह्मशब्देन विनिर्दिशन्ति ।।

शैवा यमीशं शिव इत्यवोचन्
यं वैष्णवा विष्णुरिति स्तुवन्ति ।
बुद्धस्तथार्हन्निति बौद्धजैनाः
सत्श्री-अकालेति च सिक्खसन्तः ।।

शास्तेति केचित् कतिचित् कुमारः
स्वामीति मातेति पितेति भक्त्या ।
यं प्रार्थयन्ते जगदीशितारं
स एक एव प्रभुरद्वितीयः ।।

घोषणवाक्यानि - शिक्षिका - जयतु जयतु .... बालाः - संस्कृतभाषा
'' - लसतु वदने '' ''
'' - अस्माकं भाषा '' ''
हर हर - महादेव - इत्यादीनि

## द्वितीयं दिनम्

प्रार्थना - 'या कुन्देन्दु ....' अनुवर्तते ।

श्लोकाः - सप्ताहपर्यन्तं ते एव श्लोकाः पुनरावर्तनीयाः ।

(कराग्रे...., समुद्र....., रामं....)

संस्कृतसम्भाषणम् - सः, सा, तत्, कः, का, किम्, एषः, एषा, एतत् ।

अभिनयगीतम् - बालो रोदिति........

सङ्ख्या - १ - १० (पुनःस्मारणम् )

एकादश, द्वादश, त्रयोदश, चतुर्दश, पञ्चदश, षोडश, सप्तदश, अष्टादश, नवदश, विंशतिः ।

क्रीडा - **नायकनिर्णयः**

बालाः मण्डलाकारेण तिष्ठेयुः । शिक्षिका एकं बालं बहिः प्रेषयेत् । मण्डले स्थितः कश्चित् बालकः नायकः भवति इति निर्णीयते । सः यथा अभिनयं करोति तथैव सर्वैः करणीयम् । बहिः गतः बालः आगत्य मण्डलमध्ये तिष्ठेत् । नायकः कः इति सः सूचयेत् । एकस्मै त्रिवारम् अवसरः दीयते । तदभ्यन्तरे नायकः कः इति सः सूचयेत् । नो चेत् सः बाह्यः भवति ।

नित्यपञ्चाङ्गम् - पुनरावर्तनम्

ऐक्यमन्त्रः - यं वैदिकाः ......

घोषणवाक्यानि - 'जयतु जयतु .... संस्कृतभाषा इत्यादीनि ।

## तृतीयं दिनम्

प्रार्थना - या कुन्देन्दु .....।

श्लोकाः - अनुवर्तन्ते ।

सम्भाषणम् - अहं, भवान्, भवती ।

उदा - अहं शिक्षिका

भवान् कः ? भवती का ?

गीतम् - अनुवर्तते । (बालो रोदिति ......)

सङ्ख्या - १ तः २० (पुनः स्मारणीयम् )

एकविंशतिः, द्वाविंशतिः, त्रयोविंशतिः, चतुर्विंशतिः, पञ्चविंशतिः, षड्विंशतिः, सप्तविंशतिः, अष्टाविंशतिः, नवविंशतिः, त्रिंशत् ।

योगासनम् - ताडासनम्, समस्थितिः ।

नित्यपञ्चाङ्गम् - अनुवर्तते ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## चतुर्थं दिनम्

प्रार्थना - या कुन्देन्दु .....।

श्लोकाः - अनुवर्तन्ते

सम्भाषणम् - आम्, न, वा ? अस्ति, नास्ति ।

गीतम् - अनुवर्तते (बालो रोदिति.....)

सङ्ख्या - १- ३० बालैः कथनीयम् ।

(३० पर्यन्तं सङ्ख्याः पाठिताः सन्ति । बालाः ताः वदेयुः । पुनः पुनः कथनेन अभ्यासः कारणीयः ।)

क्रीडा - **स्मरणशक्तिक्रीडा**

बालाः मण्डलाकारेण उपविशेयुः । एकः कस्यचित् महापुरुषस्य नाम वदति । तस्य पार्श्वे उपविष्टः तेन उक्तं नाम उक्त्वा अन्यस्य महापुरुषस्य नाम वदति । तृतीयः एतत् नामद्वयम् उक्त्वा स्वयमपि एकस्य महापुरुषस्य नाम वदति । एवमेव अनुवर्तते । यः दोषं वदति सः बाह्यः भवति ।

यथा - प्रथमः - विवेकानन्दः

द्वितीयः - विवेकानन्दः, शिवाजी

तृतीयः - विवेकानन्दः, शिवाजी, महात्मा गान्धिः

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## पञ्चमं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते

सम्भाषणम् - अत्र, तत्र, कुत्र, सर्वत्र, अन्यत्र, एकत्र - अभिनयः

गीतम् - बालो रोदिति .... (बालाः साभिनयं वदेयुः)

सङ्ख्या - १.....३० (पुनःस्मारणीयम्)

एकत्रिंशत्, द्वात्रिंशत्, त्रयस्त्रिंशत्,चतुस्त्रिंशत्, पञ्चत्रिंशत्, षड्त्रिंशत्, सप्तत्रिंशत्, अष्टात्रिंशत्, नवत्रिंशत्, चत्वारिंशत् ।

क्रीडा - **निषिद्धसङ्ख्या**

बालाः मण्डलाकारेण उपविशेयुः । क्रमशः सङ्ख्याः वदेयुः । तृतीयसङ्ख्यास्थाने, तस्याः वर्गस्य च स्थाने बालाः ''ॐ'' इति वदेयुः । ''ॐ'' इति वक्तव्ये यः 'ॐ'' इति न वदति सः बाह्यः भवति । ''ॐ'' इति यत्र न वक्तव्यं तत्र ''ॐ'' इति यः वदति सः अपि बाह्यः भवति । एवमेव अनुवर्तते ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## षष्ठं दिनम्

प्रार्थना

श्लोकाः - अनुवर्तन्ते

सम्भाषणम् - तस्य, कस्य, तस्याः, कस्याः, एतस्य कस्य, एतस्याः, कस्याः (अभिनयः) महापुरुषाणां चित्राणाम् उपयोगः कर्तुं शक्यते ।

गीतम् -

मम माता देवता । मम माता देवता ।।
अतिसरला, मयि मृदुला
गृहकुशला, सा अतुला ।। मम माता ।।

पाययति दुग्धं, भोजयति भक्तं
लालयति नित्यं, तोषयति चित्तम् ।। मम माता ।।

सायङ्काले नीराजयति
पाठयति च मां - 'शुभङ्करोति'
*शुभं कुरु त्वं कल्याणम् आरोग्यं धनसम्पदः ।*
*दुष्टबुद्धिविनाशाय दीपज्योतिर्नमोऽस्तु ते ।।*
पाठयति च मां 'शुभङ्करोति' ।। ।। मम माता ।।

रात्रौ अङ्के मां स्वापयति
मधु मधु मधुरं गीतं गायति
आ आ आ आ आऽऽ ।। मम माता ।।

*- ल. म. चक्रदेवः*

सङ्ख्या - १.......४० (पुनःस्मारणीयम्)
एकचत्वारिंशत्, द्विचत्वारिंशत्, त्रिचत्वारिंशत्, चतुश्चत्वारिंशत्, पञ्चचत्वारिंशत्, षड्चत्वारिंशत्, सप्तचत्वारिंशत्, अष्टचत्वारिंशत्, नवचत्वारिंशत्, पञ्चाशत् ।

क्रीडा - **आकाशभूमिपातालम्**

छात्राः मण्डलाकारेण तिष्ठेयुः । शिक्षिका 'आकाशः' इति वदन्ती हस्तं उपरि करोति, 'भूमिः' इति वदन्ती हस्तम् अग्रे प्रसारयति, 'पातालम्' इति वदन्ती जानु स्पृशति । बालाः अपि तथैव कुर्युः । मध्ये शिक्षिका 'आकाशः' इति वदन्ती जानु स्पृशेत् । हस्तम् अग्रे वा प्रसारयेयत् । किन्तु बालैः

दोषः न करणीयः । शिक्षिका यथा वदेत् तथैव करणीयम् । शिक्षिकायाः व्यवहारः न अनुसरणीयः । ये दोषान् कुर्वन्ति ते बाह्याः भवन्ति । एवं क्रीडा अनुवर्तते ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## सप्तमं दिनम्

प्रार्थना

श्लोकाः -

पूर्वसप्ताहस्य श्लोकान् छात्राः समूहरूपेण स्वयं वदेयुः । पुनः सप्ताहं यावत् नूतनं श्लोकद्वयं पाठनीयम् ।

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ।।

सम्भाषणम् - क्रियापदम् - गच्छति, आगच्छति, गच्छतु, उत्तिष्ठति, उपविशति, लिखति, पठति, गच्छामि (साभिनयम्)

समयः - ... वादनम्, सार्ध, सपाद ....

गीतम् - अनुवर्तते ।

सङ्ख्या - दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः,नवतिः, शतम् - व्युत्क्रमेण च ।

क्रीडा - **पत्रालयः**

बालाः मण्डलाकारेण तिष्ठेयुः । एकैकः बालोऽपि एकैकस्य नगरस्य नाम वदेत् । सः तत् नगरस्य नाम स्मरेत् । शिक्षिका एकस्मै बालाय बालैः उक्तस्य कस्यचित् नगरस्य नाम वदन्ती एकं पत्रं ददाति । सः पत्रं स्वीकृत्य तत् नगरनाम यः उक्तवान् तस्मै दद्यात् । सः पत्रं स्वीकृत्य एतेन सूचितं नगरं

गच्छेत् । यदि सः नाम विस्मृत्य अन्यस्य पुरतः गच्छति तर्हि
सः मुद्रायाः सूचनार्थं एकवारं ताडयेत् ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

# अष्टमं दिनम्

प्रार्थना -

श्लोकाः - (पूर्वसप्ताहे पाठिताः, सप्तमदिने पाठिताश्च अनुवर्तन्ते ।

स्तोत्रम् - **अच्युताष्टकम्**

अच्युतं केशवं रामनारायणं
कृष्णदामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिकावल्लभं
जानकीनायकं रामचन्द्रं भजे ।। १।।

अच्युतं केशवं सत्यभामाधवं
माधवं श्रीधरं राधिकाऽराधितम् ।
इन्दिरामन्दिरं चेतसा सुन्दरं
देवकीनन्दनं नन्दजं सन्दधे ।।२।।

विष्णवे जिष्णवे शङ्खिने चक्रिणे
रुक्मिणीरागिणे जानकीजानये ।
वल्लवी-वल्लभायार्चितायात्मने
कंसविध्वंसिने वंशिने ते नमः ।।३।।

सम्भाषणम् - बहुवचनपाठनम् - बालः - बालाः
माला - मालाः
नगरम् - नगराणि

गीतम् - मम माता देवता - अनुवर्तते ।

योगासनम् - ताडासनम्, वज्रासनम्

ऐक्यमन्त्रः -
घोषणवाक्यानि -

## नवमं दिनम्

प्रार्थना -
श्लोकाः - अनुवर्तन्ते । (अच्युताष्टकस्य त्रयः श्लोकाः अपि अनुवर्तन्ते ।)
सम्भाषणम् - बहुवचनम् - सः - ते - एते
सा - ताः - एताः
तत् - तानि - एतानि
गीतम् - मम माता देवता - अनुवर्तते
क्रीडा - शिरस्पर्शः
कश्चित् मण्डले स्थितानां बालानां शिरः वामहस्तेन स्पृशेत् । बालाः निवारयितुं यत्नं कुर्युः । यस्य शिरः स्पृश्यते सः बाह्यः भवति ।
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## दशमं दिनम्

प्रार्थना -
श्लोकाः - अनुवर्तन्ते
सम्भाषणम् - सप्तमीविभक्तिः - गृहं - गृहे, कोषः - कोषे, शाला - शालायाम्
यथा - घटी हस्ते अस्ति ।
शिक्षकः शालायाम् अस्ति ।
गीतम् - चटक ! चटक ! रे चटक !
चिवँ चिवँ कूजसि त्वं विहग ।
नीडे निवससि सुखेन डयसे ।
खादसि फलानि मधुराणि ।

विहरसि विमले विपुले गगने ।
नास्ति जनः खलु वारयिता ।।

मातापितराविह मम न स्तः ।
एकाकी खलु खिन्नोऽहम् ।
एहि समीपं चिवँ् चिवँ् मित्र ।
ददामि तुभ्यं बहु धान्यम् ।।

चणकं स्वीकुरु पिब रे नीरम् ।
त्वं पुनरपि रट चिवँ् चिवँ् चिवँ् ।
तोषय मां कुरु मधुरालापं ।
पाठय मामपि तव भाषाम् ।।

– *विश्वासः*

सङ्ख्या – १ – ५०

क्रीडा – **रामकृष्णक्रीडा ।**

छात्राः मण्डलाकारेण तिष्ठेयुः । क्रमशः सङ्ख्याः वदेयुः । तृतीयसङ्ख्यायाः स्थाने तस्याः वर्गस्य च स्थाने (३, ६, ९, १२, १५, १८ .....) 'रामः' इति वदेयुः । तथैव पञ्चम-सङ्ख्यायाः स्थाने, तस्याः वर्गस्य च स्थाने (५, १०, १५, २०, २५, ३० ......) 'कृष्णः' इति वदेयुः । या सङ्ख्या उभयोः अपि गुणकत्वं प्राप्नोति (१५, ३०, ४५, ६० ....) तत्र 'रामकृष्णः' इति वदेयुः । तत्तस्थाने सङ्ख्यामेव ये वदन्ति ते बाह्याः भवन्ति ।

ऐक्यमन्त्रः –

घोषणवाक्यानि –

# एकादशं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते

स्तोत्रम् - (अच्युताष्टकस्य अग्रिमः त्रयः श्लोकाः ।)

कृष्ण ! गोविन्द ! हे राम ! नारायण !
श्रीपते वासुदेवार्चित श्रीनिधे ।
अच्युतानन्त हे मादवाधोक्षज
द्वरकानायक द्रौपदीरक्षक ।।४।।

राक्षसक्षोभितः सीतया शोभितो
दण्डकारण्यभूपुण्यताकारणः ।
लक्ष्मणेनान्वितो वानरैः सेवितोऽ
गस्त्य-सम्पूजितो राघवः पातु माम् ।।५।।

धेनुकारिष्टकोऽनिष्टकृद्-द्वेषिणां
केशिहा कंसहृद् वंशिका-वादकः ।
पूतनाकोपकः सूरजाखेलनो
बालगोपालकः पातु मां सर्वदा ।।६।।

सम्भाषणम् - कति - सप्त वासराः सन्ति । कति वासराः सन्ति ? (चित्राणां वस्तूनां च उपयोगः) सप्तमीविभक्तिपाठः अपि अनुवर्तते ।

गीतम् - अनुवर्तते ।

कथा - **काकस्य कथा**

(शिक्षिकया सरलैः वक्यैः साभिनयं कथा वक्तव्या ।)
एकः वृक्षः अस्ति । वृक्षे एकः काकः अस्ति । काकस्य महती बुभुक्षा, पिपासा च । सः काकः अत्र गत्वा पश्यति । जलं नास्ति । तत्र पश्यति । जलं नास्ति । अन्यत्र गत्वा

पश्यति । तत्रापि जलं न प्राप्नोति । सर्वत्र पश्यति । तथापि जलं न प्राप्नोति । किञ्चिद्दूरम् उड्डयनं करोति । तत्र सः एकं घटं पश्यति । घटे किञ्चिदेव जलम् अस्ति । सः घटे मुखं स्थापयति । किन्तु जलं न प्राप्नोति । सः एकम् उपायं करोति । किञ्चिद्दूरं गत्वा एकं शिलाखण्डम् आनयति । घटे पूरयति । एवमेव शिलाखण्डान् आनयति, घटे पूरयति । घटः पूर्णः भवति । जलम् उपरि आगच्छति । काकः सन्तोषेण जलं पीत्वा 'का का' इति वदन् उड्डीय गच्छति ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## द्वादशं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते (पूर्वदिने पाठिताः अच्युताष्टकस्य श्लोकाः विशेषतया पाठनीयाः ।)

सम्भाषणम् - कदा - यथा - सः प्रातः ५ वादने उत्तिष्ठति ।
सः कदा उत्तिष्ठति ?
उत्तराणां प्रश्नः करणीयः । (शिक्षिका उत्तरं वदेत्, छात्राः तस्य प्रश्नं पृच्छेयुः ।)

यथा - रामः प्रातःकाले शालां गच्छति ।
रामः कदा शालां गच्छति ?

गीतम् - अनुवर्तते ।

क्रीडा - **अग्निशिला**

छात्राः मण्डलाकारेण उपविशेयुः । शिक्षिका एकस्य बालकस्य हस्ते एकं शिलाखण्डं दद्यात् । सः पार्श्वे विद्यमानाय बालकाय तं शिलाखण्डं दद्यात् । सोऽपि पार्श्वे ददाति । एवम् अनुवर्तते । तन्मध्ये शिक्षिका वृत्तम् अपश्यन्ती सूचनारवं करोति । तदा

यस्य हस्ते शिलाखण्डः भवति सः बाह्यः भवति ।

सङ्ख्या - (पुनःस्मारणम् ।)

नित्यपञ्चाङ्गम् - **तिथयः** - प्रतिपत्, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी, पूर्णिमा, अमावास्या । (सप्ताहं यावत् तासां वाचनम् अनुवर्तनीयम् ।)

ऐक्यमन्त्रः -

घोषणवाक्यानि -

# त्रयोदशं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते ।

स्तोत्रम् - (अच्युताष्टकस्य अन्तिमौ श्लोकौ)

विद्युदुद्योतवद्प्रस्फुरद्वाससं
प्रावृडम्भोदवत्-प्रोल्लसद्विग्रहम् ।
वन्यया मालया शोभितोरःस्थलं
लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ।।७।।

कुञ्चितैः कुन्तलैर्भ्राजमाननं
रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कण-प्रोज्ज्वलं
किङ्किणीमञ्जुलं श्यामल तं भजे ।।८।।

सम्भाषणम् - अद्य, श्वः, परश्वः, ह्यः, परह्यः, इदानीम् ।

योगासनम् - ताडासनम्, वृक्षासनम्, पश्चिमोत्तानासनम् ।

गीतम् - अनुवर्तते ।

सङ्ख्या - एकपञ्चाशत्, द्विपञ्चाशत्, त्रिपञ्चाशत्, चतुष्पञ्चाशत्, पञ्चपञ्चाशत्, षड्पञ्चाशत्, सप्तपञ्चाशत्, अष्टपञ्चाशत्, नवपञ्चाशत्, षष्टिः ।

ऐक्यमन्त्रः -
घोषणवाक्यानि -

## चतुर्दशं दिनम्

प्रार्थना -

श्लोकाः - गतसप्ताहद्वये पाठितान् श्लोकान् प्रतिदिनं छात्राः समूहरूपेण वदन्तः भवन्ति । एतस्मिन् सप्ताहे पुनः श्लोकद्वयं पाठनीयम् ।)

अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ।।
('भोजनसमये एतं श्लोकं वदन्तु' इति सूचना दातव्या ।)
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ।।
(अच्युताष्टकम् अपि अनुवर्तते ।)

सम्भाषणम् - गच्छन्ति - गच्छामः, गच्छन्तु ।

क्रीडा - **अनुवादाभ्यासः**

पक्षद्वयं भवेत् । एकस्मिन् गणे विद्यमानेषु एकः एकं मातृभाषाशब्दं वदति । तदा अन्यस्मिन् पक्षे एकः तस्य समानार्थकं संस्कृतशब्दं वदेत् । यस्य पक्षस्य अङ्काः न्यूनाः, सः पक्षः पराजितः भवति ।

गीतम् - अनुवर्तते ।

ऐक्यमन्त्रः -
घोषणवाक्यानि -

## पञ्चदशं दिनम्

प्रार्थना -
श्लोकाः - अनुवर्तन्ते
सम्भाषणम् - शिष्टाचारः

प्रातर्विधिः - दन्तधावनम्, समयः - इत्यादयः ।

कथा - काचित् कथा वक्तव्या ।

गीतम् - राघव ! माधव ! सीते ! ललिते !
विमानयानं रचयाम ।
नीले गगने विपुले विमले
वायुविहारं करवाम ।। राघव....।।
शुक्रश्चन्द्रः सूर्यो गुरुरिति
ग्रहान् हि सर्वान् गणयाम ।
विविधाः सुन्दरताराश्चित्वा
मौक्तिकहारं रचयाम ।। राघव....।।
उन्नतवृक्षं तुङ्गं भवनं
क्रान्त्वाकाशं खलु याम ।
कृत्वा हिमवन्तं सोपानं
चन्दिरलोकं प्रविशाम ।। राघव....।।
अम्बुदमालाम् अम्बरभूषाम्
आदायैव हि खलु याम ।
दुःखित-पीडित-कृषिकजनानां
गणेषु हर्षं जनयाम ।। राघव....।।

- *विश्वासः*

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## षोडशं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते

सम्भाषणम् - क्रियापदानां बहुवचनानि ।
गच्छन्ति - गच्छामः - गच्छन्तु ।

गीतम् - राघव ! माधव !..... अनुवर्तते ।

योगासनम् - वज्रासनम्, पद्मासनम्, ताडासनम् ।

कथा - कृष्णसम्बन्धिनी काचित् कथा वक्तव्या ।

नित्यपञ्चाङ्गम् -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## सप्तदशं दिनम्

प्रार्थना -

श्लोकाः - **लिङ्गाष्टकम्**

ब्रह्ममुरारिसुरार्चितलिङ्गम्
निर्मलभासित-शोभितलिङ्गम् ।
जन्मज-दुःखविनाशकलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।१।।

देवमुनिप्रवरार्चितलिङ्गम्
कामदहं करुणाकरलिङ्गम् ।
रावणदर्पविनाशनलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।२।।

सर्वसुगन्धि-सुलेपितलिङ्गम्
बुद्धिविवर्धन-कारणलिङ्गम् ।
सिद्धसुरासुरवन्दितलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।३।।

सम्भाषणम् - द्वितीयाविभक्तिः (स्फोरकपत्राणाम् उपयोगः करणीयः) कृपया ददातु । शिक्षिका सुधाखण्डः, लेखनी, घटी - इत्यादि-क्रमेण एकैकं वस्तु दर्शयेत् । छात्राः 'कृपया सुधाखण्डं ददातु, कृपया लेखनीं ददातु...' इति वदेयुः ।

गीतम् - राघव ! माधव !..... अनुवर्तते ।

क्रीडा - **गणक्रीडा**

छात्राः मण्डलाकारेण तिष्ठेयुः । शिक्षिका सूचनारवं करोति । तदा सर्वे मण्डले एव धावनं कुर्युः। शिक्षिका ५ तः पूर्वं एकां सङ्ख्यां वदति । तावत्-सङ्ख्यायुक्तगणेषु बालाः मिलित्वा तिष्ठेयुः । तदितरे बालाः बाह्याः भवन्ति । एवमेव क्रीडा अनुवर्तते ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

# अष्टादशं दिनम्

प्रार्थना -

श्लोकाः - अनुवर्तन्ते । लिङ्गाष्टकस्य श्लोकाः अपि अनुवर्तन्ते ।

सम्भाषणम् - पुरतः, पृष्ठतः, वामतः, दक्षिणतः. उपरि, अधः, इतः, ततः, कुतः ।

गीतम् - राघव ! माधव !..... अनुवर्तते ।

विनोदकणिका-कथनम् - सदभिरचिपूर्णा काचित् विनोदकणिका वक्तव्या ।

अकारान्तस्य 'राम'शब्दस्य सर्वेषां रूपाणां वाचनम् ।

| | | |
|---|---|---|
| रामः | रामौ | रामाः |
| हे राम ! | हे रामौ ! | हे रामाः ! |
| रामम् | रामौ | रामान् |
| रामेण | रामाभ्यां | रामैः |
| रामाय | रामाभ्यां | रामेभ्यः |
| रामात् | रामाभ्यां | रामेभ्यः |
| रामस्य | रामयोः | रामाणाम् |
| रामे | रामयोः | रामेषु |

नित्यपञ्चाङ्गम् -

सङ्ख्या -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## नवदशं दिनम्

प्रार्थना -
श्लोकाः - लिङ्गाष्टकस्य त्रयः श्लोकाः अनुवर्तनीयाः ।
सम्भाषणम् - शीघ्रं x मन्दम्
उच्चैः x नीचैः
किमर्थम् ? सप्तककाराः
(कुत्र, कदा, कति, किमर्थं, कुतः, कथम्, किम्)
गीतम् - राघव ! माधव !..... अनुवर्तते ।
योगासनम् -
रामशब्द-कथनम् -
रटनाभ्यासः -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## विंशतितमं दिनम्

प्रार्थना -
श्लोकाः - लिङ्गाष्टकम् (अग्रिमाः त्रयः श्लोकाः पाठनीयाः)
कनकमहामणि-भूषितलिङ्गम्
फणिपतिवेष्टित-शोभितलिङ्गम् ।
दक्षसुयज्ञविनाशनलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।४।।

कुङ्कुमचन्दन-लेपितलिङ्गम्
पङ्कजहार-सुशोभितलिङ्गम् ।

सञ्चितपाप-विनाशनलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।५।।

देवगणार्चितसेवितलिङ्गम्
भावैर्भक्तिभिरेव च लिङ्गम् ।
दिनकर-कोटिप्रभाकरलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।६।।

सम्भाषणम् - सप्तककाराणाम् अभ्यासः । तेषु एकैकम् उपयुज्य छात्राः परस्परं प्रश्नान् पृच्छेयुः ।

गीतम् -

मनसा सततं स्मरणीयम्
वचसा सततं वदनीयम्
लोकहितं मम करणीयम् ।। ।। लोकहितं ।।

न भोगभवने रमणीयम्
न च सुखशयने शयनीयम् ।
अहर्निशं जागरणीयम्
लोकहितं मम करणीयम् ।। ।। मनसा ।।

न जातु दुःखं गणनीयम्
न च निजसौख्यं मननीयम् ।
कार्यक्षेत्रे त्वरणीयम्
लोकहितं मम करणीयम् ।। ।। मनसा ।।

दुःखसागरे तरणीयम्
कष्टपर्वते चरणीयम् ।
विपत्तिविपिने भ्रमणीयम्
लोकहितं मम करणीयम् ।। ।। मनसा ।।

गहनारण्ये घनान्धकारे
बन्धुजना ये स्थिता गह्वरे ।
तत्र मया सञ्चरणीयम्
लोकहितं मम करणीयम् ।। मनसा ।।

- *श्रीधरभास्कर वर्णेकर*

रामशब्दकथनम् -

क्रीडा - **सन्देशप्रेषणम्**

सर्वे मण्डलाकारेण उपविशेयुः । शिक्षिका एकस्य बालस्य कर्णे एकं वाक्यं, सः एकः एव यथा शृणुयात् तथा शनैः वदेत् । सः पार्श्वे उपविष्टस्य कर्णे तदेव वाक्यं एकवारमेव वदेत् । सः अपरं वदेत् । अन्तिमः स्वेन श्रुतं वाक्यम् उच्चैः वदेत् ।

सङ्ख्या -

ऐक्यमन्त्रः -

घोषणवाक्यानि

## एकविंशतितमं दिनम्

प्रार्थना -

श्लोकाः - नूतनतया श्लोकद्वयस्य पाठनस्य आरम्भः । सप्ताहं यावत् पाठनं च ।

आपदामपहर्तारं दातारं सर्वसम्पदाम्
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।।

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम्
आयुष्यं तेज आरोग्यं देहि मे पुरुषोत्तम ।।

('यदा देवस्य नमस्कारं कुर्वन्ति तदा एषः श्लोकः वक्तव्यः' इति बालाः सूचनीयाः ।)

सम्भाषणम् - अपि, अस्तु, अहं न जानामि ।
गीतम् - मनसा सततं .....
कथा -
नित्यपञ्चाङ्गम् -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## द्वाविंशतितमं दिनम्

प्रार्थना -
श्लोकाः -
सम्भाषणम् - भूतकालः - गतवान् - गतवती
पठितवान् - पठितवती
गीतम् -
योगासनम् -
विनोदकणिका -
सङ्ख्या -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## त्रयोविंशतितमं दिनम्

प्रार्थना -
श्लोकाः - लिङ्गाष्टकम् (अन्तिमं श्लोकद्वयं पाठनीयम्)
अष्टदलोपरिवेष्टितलिङ्गम्
सर्वसमुद्भवकारणलिङ्गम् ।
अष्टदरिद्रविनाशनलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।७।।

सुरगुरुसुरवर-पूजितलिङ्गम्
सुरवनपुष्प-सदार्चितलिङ्गम् ।

परात्परं परमात्मकलिङ्गम्
तत्प्रणमामि सदाशिवलिङ्गम् ।।६।।

लिङ्गाष्टकमिदं पुण्यं यः पठेत् शिवन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते ।।

सम्भाषणम् - सः गतवान् - सा गतवती ।
अहं गतवान् - अहं गतवती

गीतम् - अनुवर्तते ।

क्रीडा - **करवस्त्रग्रहणम्**

बालाः पक्षद्वये तिष्ठेयुः । शिक्षिका मध्ये एकं करवस्त्रं स्थापयति । पक्षद्वये विद्यमानाः अपि बालाः क्रमशः सङ्ख्यां वदेयुः । स्वेन उक्तां सङ्ख्यां स्मरेयुः । शिक्षिका यां सङ्ख्यां वदति पक्षद्वयादपि तत्सङ्ख्याकः बालः धावन् आगत्य करवस्त्रम् अन्यः यथा न स्पृशति तथा नयेत् । यः नयति तस्य पक्षस्य जयः ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

# चतुर्विंशतितमं दिनम्

प्रार्थना -

श्लोकाः - लिङ्गाष्टकं पूर्णतया वाचनीयम् ।

सम्भाषणम् - भविष्यति - गमिष्यति - पठिष्यति
सम्बोधनम् - भोः, श्रीमन्, आर्ये...इत्यादीनि रूपाणि ।

गीतम् - मनसा सततं स्मरणीयम्

विनोदकणिका - सरलया भाषया, अभिनयेन, सावधानं वदेयुः ।

नित्यपञ्चाङ्गम् - तिथीनां नामानि ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## पञ्चविंशतितमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - च - अतः (बहूनि उदाहरणानि वक्तव्यानि ।)

गीतम् - अनुवर्तते

कथा - शिक्षिका आरम्भे एकां कथां वदेत् । ततः बालाः कथायाः एकैक वाक्यं वदेयुः ।

सङ्ख्या -

रटनाभ्यासः -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## षड्विंशतितमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - इति, अस्मि

गीतम् - अनुवर्तते

चित्रं दृष्ट्वा सम्भाषणम् - (बालेभ्यः एकैकं चित्रं दातव्यम् । तत् दृष्ट्वा बालाः तादृशं सम्भाषणं कुर्युः ।)

'राम'शब्दवत् 'गज' - शब्दस्य कथनम् ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## सप्तविंशतितमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - यदि - तर्हि

यथा - यदि विद्युत् अस्ति तर्हि दीपः ज्वलति ।

गीतम् -
नित्यपञ्चाङ्गम् -
कथा -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## अष्टाविंशतितमं दिनम्

प्रार्थना -

श्लोकाः - श्लोकपरिवर्तनम् । सप्ताहं यावत् प्रतिदिनम् एतयोः पाठनम् -
अनायासेन मरणं विना दैन्येन जीवनम् ।
देहि मे कृपया शम्भो त्वयि भक्तिम् अचञ्चलाम् ।।
('प्रतिदिनं देवं नमस्कुर्वन्तु । तदा एषः श्लोकः अपि वक्तव्यः' इति सूचनीयम्)
रत्नाकरधौतपदां हिमालयकिरीटिनीम् ।
ब्रह्मराजर्षिरत्नाढ्यां वन्दे भारतमातरं ।।

सम्भाषणम् - परिवर्तनाभ्यासः, कृते, गच्छति, गतवान्, गतवती ।

गीतम् -

क्रीडा - **गृहान्वेषणम्**

बालाः मण्डलाकारेण तिष्ठेयुः । एकैकः अपि बालः आत्मानं परितः एकैकं लघु मण्डलं लिखेत् । यावन्तः छात्राः भवन्ति ततोऽपि एकं मण्डलं न्यूनं भवेत् । शिक्षिका यदा सूचयति तदा बालाः मण्डले धावनं कुर्युः । शिक्षिका मण्डलम् अपश्यन्ती यदा सूचनारवं करोति तदा बालाः समीपे विद्यमाने मण्डले तिष्ठेयुः । यस्य मण्डलं नास्ति सः बाह्यः भवति ।

ऐक्यमन्त्रः -
घोषणवाक्यानि -

## नवविंशतितमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - तः - पर्यन्तम् । अद्य आरभ्य ।

गीतम् -

कथा - (या कापि लघुकथा)

**गुणनकोष्टकम्** - बालानां मुखात् वाचनीयम् ।

| | |
|---|---|
| एकस्य एकम् एकम् | द्वयोः एकं द्वे |
| एकस्य द्वे द्वे | द्वयोः द्वे चत्वारि |
| एकस्य त्रीणि त्रीणि | द्वयोः त्रीणि षट् |
| एकस्य चत्वारि चत्वारि | द्वयोः चत्वारि अष्ट |
| एकस्य पञ्च पञ्च | द्वयोः पञ्च दश |
| एकस्य षट् षट् | द्वयोः षट् द्वादश |
| एकस्य सप्त सप्त | द्वयोः सप्त चतुर्दश |
| एकस्य अष्ट अष्ट | द्वयोः अष्ट षोडष |
| एकस्य नव नव | द्वयोः नव अष्टादश |
| एकस्य दश दश | द्वयोः दश विंशतिः |

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## त्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - आसीत् - आसन् ।

आसम् - आस्म ।

गीतम् -

मातः चन्दिर एकाकी
कस्मात् गगने सञ्चरति ?
मातरं पितरं गृहं विहाय
रात्रौ सततं सञ्चरति ।। मातः...।।

वायुः वेगेन तं नयति
सूर्यः किरणैस्तापयति ।
मेघो जलेन आर्द्रयति
न कोऽपि तं परिपालयति ।। मातः...।।

अम्ब ! चन्दिरमानयतु
अस्मद्गेहे स्थापयतु ।
तेन सहाहं क्रीडामि
खादामि पिबामि नन्दामि ।। मातः...।

*– गुण्डमि गणपय्य होळ्ळः*

सम्भाषणम् – चिटिकासु आपणिकः – ग्राहकः, भ्राता – भगिनी, गुरुः – शिष्यः, इत्यादीनि युगलनामानि लिखित्वा स्थापनीयानि । बालद्वयम् एकां चिटिकां स्वीकृत्य तस्यां चिटिकायां ययोः नाम अस्ति तयोः सम्बद्धानि दश वाक्यानि वदेत् ।

ऐक्यमन्त्रः –

घोषणवाक्यानि –

## एकत्रिंशत्तमं दिनम्

प्रार्थना –

श्लोकाः –

सम्भाषणम् – क्रियापदानां बहुवचनम् ।
करोमि – कुर्मः, ददामि – दद्मः
जानामि – जानीमः, शृणोमि – शृणुमः

गीतम् -

कथा -

रटनाभ्यासः -

ऐक्यमन्त्रः

घोषणवाक्यानि -

## द्वात्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - तुमुन्

पठति - पठितुम्, लिखति - लेखितुम्

गीतम् -

क्रीडा - **व्याघ्रधेनुकम्**

छात्राः मण्डलाकारेण तिष्ठेयुः । एकः व्याघ्रः भवेत् । अन्यः धेनुः भवेत् । सर्वे बालाः हस्तं गृहीत्वा तिष्ठेयुः । व्याघ्रः मण्डलं भित्त्वा धेनुं ग्रहीतुम् इच्छति । अन्ये बालाः धेनुं रक्षितुं यत्नं कुर्युः ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## त्रयस्त्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - लिङ्गभेदः

एकः - एका - एकम् (एकः ग्रामः ......)

भोजनसम्बन्धिशब्दाः, वर्णाः, रुचयः । (वस्तुदर्शनपूर्वकं पाठनीयम् ।)

गीतम् -

अनन्त्यकथारचना - (बालाः कथायाः एकैकं वाक्यं वदेयुः । कथायाः समाप्तिः न करणीया ।)

रटनाभ्यासः -

सङ्ख्या -

एक्यमन्त्रः -

घोषणवाक्यानि

## चतुस्त्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - तृतीयाविभक्तिः, सह, विना उपयोगः)

गीतम् -

गजशब्दरूपाणि - सप्तसु विभक्तिषु ।

नित्यपञ्चाङ्गम् -

रटनाभ्यासः -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## पञ्चत्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः - नूतनं श्लोकद्वयं पाठनीयम् । (प्रतिदिनं, सप्ताहं यावत्)

तुलस्यां सकला देवा वसन्ति सततं यतः ।
अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन् ।।

प्रसीद तुलसीदेवि प्रसीद हरिवल्लभे ।
क्षीरोदमथनोद्भूते तुलसि त्वां नमाम्यहम् ।।

('प्रतिदिनं तुलसीं नमस्कुर्वन्तु । तदा एतत् श्लोकद्वयं वदन्तु' इति बालाः सूचनीयाः । )

सम्भाषणम् - अद्यतन, ह्यस्तन, श्वस्तन, पूर्वतन, इदानीन्तन, गत, आगामि ।

गीतम् -
चित्रं दृष्ट्वा कथाकथनम् -
रटनाभ्यासः -
नित्यपञ्चाङ्गम् -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## षड्त्रिंशत्तमं दिनम्

प्रार्थना -
श्लोकाः -
सम्भाषणम् - स्म, अभवत्, क्त्वाप्रयोगः - गत्वा इत्यादीनि ।
गीतम् -
रटनाभ्यासः -
सङ्ख्या -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## सप्तत्रिंशत्तमं दिनम्

प्रार्थना -
श्लोकाः -
सम्भाषणम् - बन्धुजनवाचकशब्दाः, वेषभूषणानां नामानि ।
पुरातनं x नूतनम् । बहु x किञ्चित् ।
क्रीडा - **सङ्ख्यायोजनम्**
बालाः मण्डलाकारेण उपविशेयुः । एकः बालः दशतः पूर्वम् एकां सङ्ख्यां वदति । तदा शिक्षिका काञ्चित् सङ्ख्यां योजयतु, (३ योजयतु) इति वदेत् । बालः तां सङ्ख्यां योजयित्वा योजितां सङ्ख्यां वदेत् । एवम् अनुवर्तते ।
ऐक्यमन्त्रः - घोषणवाक्यानि -

## अष्टात्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - दीर्घः x ह्रस्वः, उन्नतः x वामनः, स्थूलः x कृशः,
ईदृशः तादृशः, कीदृशः

गीतम् -

विनोदकणिका -

गजशब्दरूपाणि - (एकैकः अपि वदेत्)

रटनाभ्यासः -

एक्यमन्त्रः -

घोषणवाक्यानि -

## नवत्रिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - तुमुन्, किन्तु

गीतम् -

कथा -

रटनाभ्यासः -

नित्यपञ्चाङ्गम् -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## चत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - निश्चयेन, किल, बहुशः

गीतम् -

अहं प्रभाते उत्तिष्ठामि मातापितरौ प्रणमामि ।
देवान् भक्तवरेण्यान् नत्वा पठने मतिं विधास्यामि ।।१।।

विना विलम्बं शालां गच्छन् पाठ्यांशान् अवगच्छामि ।
सर्वान् विषयान् सम्यगधीत्य बुद्धिविशदतां प्राप्नोमि ।।२।।

शिष्टाचारान् साधु विचारान् वृद्धिकरान् आकलयामि ।
विद्याभ्यासाचारविचारैः सर्वश्रेष्ठतां विन्दामि ।।३।।

*- जनार्दन हेगडे*

योगासनम् -
नित्यपञ्चाङ्गम् -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

# एकचत्वारिंशत्तमं दिनम्

प्रार्थना -
श्लोकाः -
सम्भाषणम् - शक्नोति, विशेषण - विशेष्यभावस्य अभ्यासः -
प्राणिनां नामानि -
गीतम् -
अवयवानां नामानि -
गीतम् -
क्रीडा -

**अवयवस्पर्शः**

अध्यापिका यस्य अवयवस्य नाम वदति तम् अवयवं छात्राः स्पृशेयुः । अवयवनाम-कथन-समये अध्यापिका अन्यम् अवयवं स्पृशन्ती अवयवस्य नाम वदेत् । छात्राः अध्यापिकायाः वचनम् अनुसरेयुः, न तु व्यवहारम् । यः दोषं करोति सः बाह्यः भवति ।

ऐक्यमन्त्रः -
घोषणवाक्यानि -

## द्विचत्वारिंशत्तमं दिनम्

प्रार्थना -
श्लोकाः -
नित्यपञ्चाङ्गम् -
सम्भाषणम् - क्त्वा - तुमुन् - परिवर्तनम्
यथा - शालां गत्वा पाठं पठति ।
पाठं पठितुं शालां गच्छति ।
बहिः x अन्तः रिक्तम् x पूर्णम्
गीतम् -
कथा -
रटनाभ्यासः -
दश वाक्यानि -
ऐक्यमन्त्रः -
घोषणवाक्यानि -

## त्रिचत्वारिंशत्तमं दिनम्

प्रार्थना -
श्लोकाः -
सम्भाषणम् - इतोऽपि, इत्युक्ते, अन्ते
यथा - रामः इत्युक्ते दाशरथिः ।
मम गृहम् अन्ते अस्ति ।
गीतम् -
चित्रं दृष्ट्वा कथाकथनम् -
क्रीडा - शिक्षिका नित्योपयोगिनां वस्तूनां नामानि लिखित्वा स्थापयति । एकैकः बालोऽपि एकैकां चिटिकां स्वीकुर्यात् ।

तस्यां चिटिकायां यत् नाम लिखितम् अस्ति; तद्विषये एकैकोऽपि पञ्च वाक्यानि वदेत् ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## चतुश्चत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - चेत् - नो चेत्

गीतम् -

प्रश्नोत्तरीस्पर्धा - (पक्षद्वयं करणीयम् । पक्षयोः मध्ये सामान्यज्ञानम् अधिकृत्य प्रश्नोत्तरं कारणीयम् ।)

गुणनकोष्टकम् -

रटनाभ्यासः -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## पञ्चचत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - वारम्, एकवारं, द्विवारं, अतः - यतः
(पेट्रोल् अस्ति, अतः वाहनं चलति ।)

गीतम् - ओतो ओतो मोहन केतो ! क्नु खलु यातोऽसि ?
आहूतोऽसि, नासि कुतोऽसि ?
आखुं गृह्णासि आ ऽऽऽ आखुं गृह्णासि ।। ओतो ।।

कोऽष्णं क्षीरं तवोपनीतम् आगच्छागच्छ ।
आगन्तुं ते नेच्छति चित्तं
वाञ्छसि किं ब्रूहि ? ।। ओतो ।।

गेहे गेहे दधिनवनीते खादसि चौर्येण ।
पायं पायं पयसः पूरं
पूरितमुदरं ते ।। ओतो ।।

*- भीमनकोणे भास्कर भट्टः*

कथा - कृष्णस्य काचित् कथा वक्तव्या ।

नित्यपञ्चाङ्गम् - विक्रमनामसंवत्सरस्य दक्षिणायने श्रावणमासे शुक्लपक्षे षष्ठीतिथिः - एवं क्रमेण तस्य दिनस्य तिथिवाचनं कारणीयम् ।

गुणनकोष्टकम् -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## षड्चत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - अतः - यतः - परिवर्तनम्

उदा - विद्युत् नास्ति, अतः दीपः न ज्वलति ।
दीपः न ज्वलति, यतः विद्युत् नास्ति ।

गीतम् - अनुवर्तते ।

गुणनकोषटकम् -

गजशब्दरूपाणि -

एक्यमन्त्रः -

घोषणवाक्यानि -

## सप्तचत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः - अग्रिमदिनेषु एतत् श्लोकद्वयं पाठनीयम् -

यन्मूले सर्वतीर्थानि यन्मध्ये सर्वदेवताः ।
यदग्रे सर्ववेदाश्च तुलसि त्वां नमाम्यहम् ।।

नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे ।
नमो मोक्षप्रदे देवि नमः सम्पत्प्रदायिके ।।

सम्भाषणम् - प्रश्नोत्तराणि, अस्माकम् ।

गीतम् -

सम्भाषणाभिनयः - (बालाः प्रदर्शयेयुः)

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## अष्टचत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः - पुनरावर्तनम्

सम्भाषणम् - सान्दर्भिक-सम्भाषणम्
यथा - दूरवाणी-सम्भाषणम्

गीतम् -

नित्यपञ्चाङ्गम् -

सङ्ख्या -

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## नवचत्वारिंशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - अस्माकम्

यथा - अस्माकं देशः भारतदेशः
अस्माकं भाषा संस्कृतभाषा

गीतम् -

एकश्वासेन सङ्ख्याकथनम् - (बालैः)

गुणनकोष्टकम् -

क्रीडा - सङ्ख्यालेखनम्

बालद्वयम् आगच्छति । शिक्षिका यां सङ्ख्यां वदति तां बालद्वयं लिखेत् । यः शीघ्रं समीचीनं लिखति तस्य जयः भवति ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

## पञ्चाशत्तमं दिनम्

प्रार्थना -

श्लोकाः -

सम्भाषणम् - नित्योपयोगि-सम्भाषणम् ।

गीतम् -

चर्चा -

क्रीडा - सङ्ख्यान्वेषणम्

चार्ट्मध्ये एकतः शतपर्यन्तम् अव्यवस्थित-क्रमेण सङ्ख्याः लिखिताः भवन्ति । बालानां गणः करणीयः । एकस्मात् गणात् एकः आगच्छति । शिक्षिका एकां सङ्ख्यां संस्कृतेन वदति । तदा चार्ट्मध्ये सा सङ्ख्या कुत्र अस्ति इति बालौ अन्वेषणं कुरुतः । यः प्रथमम् अन्विषति तस्य जयः । पुनः बालयोः परिवर्तनं करणीयम् ।

ऐक्यमन्त्रः -

घोषणवाक्यानि -

* * * * *

# बालकेन्द्रे गापयितुं योग्यानि गीतानि

## १. वयं बालकाः

वयं बालका भारतभक्ताः
वयं बालिका भारतभक्ताः
वयं हि सर्वे भारतभक्ताः
पृथ्वीं स्वर्गं जेतुं शक्ताः ।। वयम् ।।

वयं सुधीराः वयं सुवीराः
हृष्टमानसाः पुष्टशरीराः ।
भूरि पठामो भूरि लिखामो
भवितास्मो जनहिते नियुक्ताः ।। वयम् ।।

जाति-धर्म-मत-भेदं त्यक्त्वा
भारतवर्षं पूज्यं मत्वा ।
भगवद्भावं हृदये धृत्वा
भारतसेवायामनुरक्ताः।। वयम् ।।

*- नरेन्द्रः*

## २. कृष्ण ! नृत्यति हृदि तव रूपम्

कृष्ण ! नृत्यति हृदि तव रूपम्
श्यामल-निर्मल-मङ्गल-गात्रम् ।
ते दर्शनतो रमते चित्तं भावय तत् त्वं गोकुलकल्पम् ।। कृष्ण ।।

कनक-पुरस्कृत-मणिमय-भूषं
राधा-राग-विराजित-वेषम् ।
वेणु–निनाद-विलासित-लास्यं
नतजनवरदं कलयतु नित्यम् ।। कृष्ण ।।

गोवर्धनधर प्रणतानुद्धर
गीतामृत-रसमनिशं वितर ।
गोपीरञ्जन रञ्जय हृदयं
गोपरिपालन पालय सदयम् ।। कृष्ण ।।

*- गु. गणपय्य होळ्ळः*

# ३. आम्लं द्राक्षाफलम्

एकः शृगालः
एकः शृगालः वनं गच्छति ।
पिपासा, तस्य बुभुक्षा
पिपासया बुभुक्षया च सः वनं गच्छति
सः वनं गच्छति, सः वनं गच्छति ।

तत्र गच्छति, किमपि न लभते
इतोऽपि गच्छति, किमपि न लभते
श्रान्तः जायते, खिन्नः जायते
सः, श्रान्तः जायते खिन्नः जायते
किं च करोति ? सः किं च करोति ?

वामतः पश्यति, दक्षिणतः पश्यति
अग्रतः पश्यति, पृष्ठतः पश्यति
स्वेदः जायते, तृषा जायते
तस्य, स्वेदः जायते तृषा जायते
किं च पश्यति ? सः किं च पश्यति ?

पश्यति द्राक्षालतां
सः पश्यति द्राक्षाफलम्
उपरि उपरि लतासु दृश्यते च तत्फलम्
अनुक्षणं तन्मुखे रसः जायते
किं च करोति ? सः किञ्च करोति ?

एकवारम् उत्पतति, द्विवारम् उत्पतति
त्रिवारम् उत्पतति पुनः पुनः उत्पतति
स्वेदः जायते तस्य श्रमः जायते
किं कथयति ? सः किं कथयति ?

आम्लं द्राक्षाफलम्
आम्लं द्राक्षाफलम्
इत्येवं कथयति, पलायते
इत्येवं कथयति पलाऽऽयते !!

*– डा॰ नारायणभट्टः*